१६२। क्लीवाद् यौः।

( क्लीवात् ५।, ई।१।, औः १। )।

क्लीवात् पर औरी स्यात्। ज्ञाने।

१६३। जस्शसोः शिः।

( जस्शसोः ६॥, शिः १। )।

क्लीवात् परस्य जसः शसश्च शिः स्यात्, श इत्।

१६४। नुणयमादौ झसन्तरलादौ तु वा।

(नुण्।१।, अयमादौ ७।, झसन्तरलादौ ७।, तु।१।, वा।१।)।

क्लीवस्य शौ परे नुण् स्यात्, न तु यमादौ, झसन्तरलयोरादौ तु वा स्यात्।

---

१६२। क्लीवाद्यौः। ई इति लुप्तप्रोक्तं दम्। पुनः क्लीवग्रहणात् अनतोऽपि औरीस्तेन वारिणी पयसी इत्यादि।

१६३। जस्। शित् करणं शिः क्लीवे इति विशेषणार्थम्।

१६४। नुण्। यमस्यादिः यमादिर्न यमादिरयमादिस्तस्मिन्। झस् अन्ते ययोस्तौ, रश्च लश्च तौ, झसन्तौ च तौ रलौ चेति तौ, तयोरादिः झसन्तरलादिस्तस्मिन्। त्तिं विपरिणम्य क्लीव शौ इत्यनुवर्त्तयन्नाह क्लीवस्य शौ परे इति। अयमादौ किं--बहवो यो येषु तानि बहुयि पद्यानि बहुप्रशामि इत्यादि। झसन्तरलादौ तु ऊन्र्ज्जि ऊर्ज्जि सुवन्लि सुवल्गि इत्यग्रे वक्ष्यति।

## १६५ । नसब्महन्नोऽधो घँऽधौ घौ ।

(नस् अप्-महत्-नः ६।, अधोः ६।, घँः १।, अधौ ७।, घौ ७।)।

नसन्तस्यापो महतो नान्तस्य च धुवर्जस्य घँः स्यात् अधौ घौ परे। ज्ञानानि। द्वौ प्रौवत्। शेषं रामवत्। एवं वन-धन-फलादयः।

## १६६ । तोऽन्यादेर्मोऽनेकतरात् ।

( तः १।, अन्यादेः ५।, मः ६।, अनेकतरात् ५। )।

अन्यादेः परस्य स्यमो मस्य तः स्यात्, न त्वेकतरात् परस्य। अन्यत् अन्ये अन्यानि। हे अन्य। पुनस्तद्वत्। शेषं पुंवत्। एवमन्यतरादयः। अनेकतरात् किम्—एकतरम्।

---

१६५। नस। नस् च आपश्च महांश्च न च तत् तस्य, न धुरधुस्तस्य, न धिरधिस्तस्मिन्। धिवर्ज्जनादक्लीवेऽपि राजा सीमा इत्यादौ घँः। गौणेऽपि अयं विधिस्तेन सुविद्वांसि सुराजानि कुलानि इत्यादि।

१६६। तो। अन्य आदिर्यस्य स तस्मात्, न एकतरम् अनेकतरं तस्मात्। मण्डूकगत्या स्यमोरित्यनुवर्त्तयन्नाह स्यमोरिति। अन्यादेः किं—अन्यतमम्। अन्यतमदिति भाष्यम्(१)। हे अन्यदिति कश्चित्।

---

(१) सिद्धान्तकौमुद्यान्तु टेः। ६। ४। १४३। इति सूत्रे अन्यतम शब्दस्य त्वन्यतमदित्येवेति वृत्तिः।

१६७। जरातोऽम् वा।

( जरातः ५।, अम् ।१।, वा ।१। )।

जरा शब्दात् परस्य स्यमोर्मस्य अम् स्यात् वा। अजरसम् अजरम् अजरसी अजरे, अजरांसि अजराणि। पुनस्तद्वत्। शेषं पुंवत्।

(११७) पाददन्तेति शीर्षहृदयोदकासनानां शीर्षन् हृदुदनासनः। शीर्षाणि शीर्ष्णा शीर्षभ्यामित्यादि। हृन्दि हृदा हृद्भ्यामित्यादि। उदानि उद्ना उदभ्यामित्यादि। आसानि आस्ना आसभ्यामित्यादि। पक्षे शेषे च ज्ञानवत्।

१६८। क्लीबे ह्रस्वः। ( क्लीबे ७।, ह्रस्वः १। )।

क्लीबे घंस्य ह्रस्वः स्यात्। श्रीपं, ज्ञानवत्।

---

१६७। जरा। म इत् अकारागमः। जरसादेशनिमित्तकाऽमो नित्यत्वाज्जरसादेशस्य नित्यत्वसन्देहनिरासार्थं वाग्रहणमिति कश्चित्। (१)

१६८। क्लीबे। ह्रस्वशब्दस्य सापेक्षत्वात् घंस्येति लभ्यते इत्याह क्लीबे घंस्येति। क्लीबे इति निर्देशात् येन विधिस्तदन्तस्येति न्यायात् अन्त्यस्यैव घंस्य ह्रस्वः, तेन श्रीपमित्यत्र श्रीकारस्य न ह्रस्वः, एवं सह एन वर्त्तमानं सं इत्यादि। प्रकरणात्क्लेरेव, तेन ग्लाने त्वपु-

---

(१) वाग्रहणं मुख्यलाक्षणिकयोर्मुख्यस्य ग्रहणमित्यस्यानित्यत्वज्ञापनार्थं, तेन सर्व्वेषामित्यादौ ब्वेस्भ्येरित्यन्यः। अतएव जरसादेशाभावपक्षे अजरमित्यत्र अमादिलोप इत्यधिकः पाठः।

१६९। **स्यमो र्लुक्।** (सि-अमोः ६॥, लुक् ।१।)।

क्लीवात् परयोः स्यमोर्लुक् स्यात्। वारि।

१७०। **नुणिको ऽच्यनामि।**

(नुण् ।१।, इकः ६।, अचि ७।, अनामि ७।)।

इगन्तस्य क्लीवस्य नुण् स्यात् अचि परे, नत्वामि। वारिणी वारीणि।

---

णी इत्यादौ न ह्रस्वः। वनाभ्यां वनेभ्यः इत्यादौ असिद्धं वहिरङ्ग-मन्तरङ्गे इति न्यायात् असिद्धः ह्रस्वो न स्यात् (१)।

१६९। स्यमोर्लुक्। सिश्च अम् च तौ तयोः। क्लिं विपरिण-म्याह क्लीवादिति।

१७०। नुणिकः। इक् प्रत्याहारः, न आम् अनाम् तस्मिन्। नञ् युक्तवन्न्यायात्, स्याद्यचीव (२) तेन वारीदम् इत्यादौ न स्यात्। वारिणी इति णित्त्वादन्ते, आदौ नुण् पश्चात् ई। वारीणीति जसः शिस्तस्मिन् नुस्त्रयमादाविति नुण् नसव्महन्न इति दीर्घः (३)।

---

(१) अन्तरङ्गे प्रकृतिघटितकार्य्यस्थले वहिरङ्गं प्रत्ययघटितकार्य्यम् असिद्धम् अग्राह्यं भवतीत्यर्थः। अत्र क्लीवलिङ्गशब्दस्य योऽन्त्यदीर्घस्तस्य ह्रस्वविधानात् प्रत्ययघटितदीर्घस्य ह्रस्वत्वं न स्यात् तेन वनाभ्याम् इत्यादौ न ह्रस्वः। अतएव संक्षिप्तसारे सुबन्तपादे "नाप्रकृते"रिति ९८ सूत्रस्य टीकायां प्रकृतेरन्त्योऽप्रतिः प्रत्ययादिः। प्रत्ययादेः सम्बन्धे सति क्लीवे प्राप्तो ह्रस्वो न भवतीति गोयीचन्द्रः।

(२) यादृग् जातीयस्य प्रतिषेधो विधिरपि तादृग्जातीयस्येति न्यायादित्यर्थः।

(३) अनामीति किं वारीणामित्यादौ अन्तरङ्गत्वादादौ नुणि कृते ह्रस्वपरत्वा-भावान्नुमागमाभावे दण्डिनामित्यादिवद्दीर्घो न स्यादिति दुर्गादासः।

१७१ । गुर्धौ वा । ( गुः १।, धौ ७।, वा ।१। ) ।

इगन्तस्य क्लीवस्य गुर्व्वा स्यात् धौ परे । हे वारे हे वारि । वारिणी वारीणि वारिणा वारिणे वारिणः वारिणः वारिणोः वारीणां वारिणि वारिणोः । हसे हरिवत् ।

१७२ । पुंवद्वार्थोक्तपुंस्कं टाद्यचि ।

( पुंवत् ।१।, वा ।१।, अर्थोक्तपुंस्कं १।, टाद्यचि ७। ) ।

इगन्तं क्लीवम् अर्थेन प्रोक्तपुंस्कं पुंवत् वा स्यात् टाद्यचि । अनादये अनादिने इत्यादि । शेषं वारिवत् । अर्थेन किं पीलुने फलाय ।

---

१७१ । गुर्धौ । विधानसामर्थ्यात् लुकि वा गुः । हे सुधे हे सुधि, हे सुनो हे सुनु, हे सुधातः हे सुधातृ, हे लिखितगमल् हे लिखितगमॢ इत्यादि ।

१७२ । पुंवत् । पुमानिव पुंवत् । अर्थेन तुल्यप्रवृत्तिनिमित्तेन उक्तः पुमान् येन तदर्थोक्तपुंस्कम् । टा आदिर्यस्य स टादिः टादिरच् टाद्यच् तस्मिन् । तथाच येनार्थेन क्लीवे वर्त्तते तेनैवार्थेन यदि पुंसि वर्त्तते तदा टाद्यचि पुंवदित्यर्थः । टाऽद्यविशेषात् ङेऽचि उदाहरति अनादय इत्यादि । अनादिशब्दः प्रवृत्तिनिमित्तेन (१) पुंक्लीवयोर्वर्त्तते । अनादये अनादिने, एवं पटवे पटुने इत्यादि । टाऽचितु कर्त्रा कर्तृणा इत्यादि । पीलुने इति पीलुर्वृक्षभेदः, पीलोर्विकारः फलमित्यर्थे विहितणस्य "फले लुबि"ति

---

(१) आदिरहिततरूपेणार्थेनेत्यर्थः ।

१७३। दध्यस्थिसक्थ्यक्ष्णो ऽनङ्।

( दधि-अस्थि-सक्थि-अक्ष्णः ६।, अनङ् ।१। )।

एषामनङ् स्यात् टाद्यचि, अङावितौ। (११८) अनो ऽल्लोपः। दध्ना दध्ने दध्नः दध्नः दध्नोः दध्नां दध्नि दधनि दध्नोः। शेषं वारिवत्। एवम् अस्थि सक्थि अक्षि।

सुधि सुधिनी सुधीनि। हे सुधे हे सुधि। टा प्रोवत्। सुधिया सुधिना इत्यादि। एवं प्रध्यादयः।

मधु मधुनी मधूनि। हे मधो हे मधु। टा प्रोवत्। मधुना मधुभ्यामित्यादि। एवमम्बु-सान्वादयः। (११७) पाददन्तेति स्नु वा। स्नूनि सानूनि इत्यादि भेदः।

धातृ धातृणी धातॄणि। धा हे धातः हे धातृ। टा प्रोवत्। धात्रा धातृणा इत्यादि। एवं ज्ञातृ-कर्त्रादयः।

---

लुप्, अतएव वृक्षत्वप्रवृत्तिनिमित्तेन पुंसि वर्त्तते, क्लीबे तु फलत्वप्रवृत्तिनिमित्तेन इति न उक्तपुंस्कम्।

१७३। दध्यस्थि। दधि च अस्थि च सक्थि च अक्षि च तत् तस्य। एषां गौणेऽपि अनङ्, तेन अतिदध्ने सुसक्थ्ने विप्राय इत्यादि। क्लीबानुवृत्तेः दधिर्नाम कश्चित् तेन, दधिना इत्यादौ न स्यात्। स्नूनीति—इदं नेच्छन्ति परे (१)।

---

(१) सानुशब्दस्य स्नुर्वा इति सिद्धान्तकौमुद्यां ७।१।७४। सूत्रस्य वृत्तिः। तद्व्याख्यानं तत्त्वबोधिन्यां यथा—मास-पृतना-सानूनामिति वार्त्तिककारोक्त्येतिभावः। स्नुः प्रस्थः सानुरस्त्रियामित्युभयलिङ्गः सानुशब्दस्तस्य नपुंसकत्वे रूपमाह स्नूनि सानूनीति। पुंसि तु स्नून् सानून् इत्यादि।

१७४ । एचो युत् स्वं ।

( एचः ६।, युत् ।१।, स्वं २। ) ।

प्रद्यु (१) प्रद्युनी प्रद्यूनि । हे प्रद्यो हे प्रद्यु । द्वौ प्रौवत् । प्रद्यवा प्रद्युना इत्यादि ।

सुरि (२) सुरिणी सुरीणि । हे सुरे हे सुरि । सुराया सुरिणा सुराभ्यामित्यादि ।

सुनु (३) सुनुनी सुनूनि । हे सुनो हे सुनु । सुनावा सुनुना इत्यादि ।

इति अजन्त क्लीवलिङ्गपादः ।

इति अजन्ताध्यायः ।

---

१७४ । एचो युत् । इश्च उश्च तत्, तस्मात् त युत् । एचः स्वं प्राप्नुवतो युत् स्यादित्यर्थः । एचः कण्ठ्यत्वात् एषां यो येन इति नियमात् अकारे प्राप्ते नियमोऽयम् । प्रद्यु इत्यादि—प्रकृष्टा द्यौर्यस्य कुलस्य इत्यादिक्रमेण वाक्यम् ।

इत्यजन्तनपुंसकपादः ।

इत्यजन्ताध्यायः ।

---

(१) प्रकृष्टा द्यौः स्वर्गो यस्मात् तत् प्रद्यु पुण्यं, प्रद्यौर्यागश्च ।

(२) शोभनो रा धनं यस्य तत् सुरि कुलं, सुराः पुमांश्च ।

(३) शोभना नौर्यत्र तत् सुनु जलं, सुनौर्देशश्च ।

---

## हसन्त-पुंलिङ्गशब्दः ।

१७५ । द्विरुक्त-जक्षादौ द्विः ।

( द्विरुक्त-जक्षादौ १॥, द्विः १। ) ।

कृतद्वित्वशब्दो जक्षादिश्च द्विसंज्ञः स्यात् ।

---

अमरगुरु-सम-श्रीवोपदेव-प्रणीते
प्रकरण-परिपाटी-जन्य-शोभा-विभाते ।
सुमति-जन-विनोदिन्यद्भुते मुग्धबोधे
प्रविलसतु कृताध्यायेऽत्र टीका द्वितीये ॥

---

१७५ । द्विरुक्त । द्विरुक्तं यस्य सः (१) । जक्ष आदिर्यस्य सः द्विरुक्तश्च जक्षादिश्च तौ । जक्षादिर्यथा—सप्त जक्षादयः प्रोक्ता जक्षि-जागर्त्ति-शास्तयः । दरिद्राति-चकास्तौ च दीधीवेव्यौ च वैदिकौ । पूर्वत्र प्रयोजनाभावादत्र संज्ञा क्रियते । संज्ञापादं परित्यज्य द्विसंज्ञाकरणात् क्वचिन्न स्यात्, तेन जक्षिवान् पेचिवान् ददृशिवान् इत्यादौ नुण् स्यादिति कश्चित् ।

---

(१) द्वौ वारौ उक्तं कथनं यस्य सः । अत्र दुर्गादासः—अत्र द्वेरुक्तेऽपि द्विरुक्तजक्षादौ इति द्विवचनं, प्रकृतिविकृतिभेदान्न विरुद्धम् । अतएव द्वौ द्वौ माघादिमासौ स्यादृतुरित्यमरः । एवं युग्मलौ कर्नृत्यत्रापि बोध्यम् ।..........दीधीवेवी इति द्वौ वैदिकावात्मनेपदिनौ विभक्तिव्यत्ययात् परस्मैपदे अनुशासेदिति अनडुहि गुरुस्तथामिति गुरुवे अदीधयुः अवेवयुरिति कामधेनौ बोपदेव इत्याह ।

## १७९। मुहां घङ् वा भौ।

( मुहां ६।।।, घङ् ।१।, वा ।१।, भौ ७। । )

मुहादीनां घङ् वा स्यात् भौ परे।

मुक् मुग् मुट् मुड् मुहौ मुहः, मुहं मुहौ मुहः, मुहा मुग्भ्यां मुड्भ्यामित्यादि। एवं द्रुह स्नुह नश स्निहः।

---

भत्वम्। केचित् बिभ्यत्सति इत्याहुः। एके तु पूर्व्ववदित्याहुः (१)। अत्र जबां झभा इति लिपिकरप्रमादः। एकाचो बशो भष् झषन्तस्य स्ध्वोरिति (८।२।३७) पाणिनिसूत्रात्। अतएव द्विजिह्वमाचचाणो द्विजिट् इत्यादौ न स्यात्। (२)

१७९। मुहाम्। बहुनिर्देशो गणार्थः। दादेर्घ इत्यनेनास्य योगविभागो नक्-सिद्ध्यर्थः, तत्र हानुवृत्तेः।

---

(१) विभ्यत्सतीत्याहुरित्यर्थः।

(२) अत्र जबां झभा इति लिपिकर-प्रमाद इत्युक्तवता तर्कवागीशेन स्वटीकाकरणात् प्रागपि तादृक्पाठस्यास्तित्वमरुचिकरमपि स्वीकृतम्। तेनैवास्माभिरादौ संज्ञाप्रकरणे अ इ उ ऋ ऌ केति सूत्रे प्रत्याहारोपदेशे तर्कवागीशष्टता डचिति संज्ञा न दर्शिता। तदत्र जबां झभा इति पूर्व्वतन एव पाठो निवेशितः। जकारस्य बमत्वानुचितत्वेऽपि संक्षेपकथनाय यथाचार्य्येण जबित्युक्तं तथा कातन्त्रेऽपि चतुर्थवृत्तौ "हचतुर्थान्तस्य धातोस्तृतीयादेरादिचतुर्थत्वमकृतवत्" (१६२) इति सूत्रे तृतीयादेरिति शर्व्ववर्म्मणापि। संक्षिप्तसारे तु "तुर्य्यान्तस्तृतीयोऽजस्तुर्य्यो भादौ" इति सुबन्तपादस्य १५९ सूत्रे अज इत्युक्त्वा तत्रैव १६० सूत्रे अज इति किं जभ्-जम्यते इत्युदाहृतम्। अतः पाणिनिक्रमदीश्वरयोरैकमत्यं दृश्यते। तन्मतैकवाक्यत्वे एकस्मिन् सूत्रे एकमात्र-कार्य्यार्थमेकसंज्ञास्वीकरणापेक्षया अत्र सूत्रे जकारस्य झकारो नेति वक्तव्यमस्तु। द्विजिह्वमाचचाणो द्विजिट् इत्युदाहरणं लुपि न सम्ध्याद्यविधौ इत्यत्र नञा निर्दिष्टमनित्यमिति

१८०। वाहो वौ पौ श्वेतात्तु वा।

(वाहः ६।, वा ।१।, औ ।१।, पौ ७।, श्वेतात् ५।, तु ।१।, वा ।१।)।

वाहो वा शब्दस्य औः स्यात् पौ परे, श्वेतवाहस्तु वा।

विश्वौहः विश्वौहा इत्यादि। शेषं लिड्वत्।

१८१। अनादूः। (अनात् ५।, ऊः १।)।

अनवर्णात् परो वाहो वा ऊः स्यात् पौ परे। भूहः भूहा इत्यादि।

---

१८०। वाहो। परसूत्रे अनादित्युक्तेः अवर्णादस्य विषयः।

१८१। अना। न अः अनस्तस्मात् अवर्णभिन्नादित्यर्थः, तेन शाल्यूहः, मरुदूहः इत्यादि (१)। ननु पूर्व्वसूत्रे औकारं विनापि जटि आदूटो त्रिरिति त्रौ विश्वौहः विश्वौहा इति चेत् सत्यं, वैचित्र्यार्थमिदमिति। यद्वा पूर्व्वसूत्रे पौ विधानात् दा ल लूनौ क्ति दातिस्तां वहति दातिवाट्, तस्यापत्यं दात्यौहः इत्यनवर्णादपि औरिति स्वामी। दात्यूह इति रायः। इदं छान्दसमिति परे।

---

न्यायानङ्गीकारे कथं सङ्गच्छते तत् सुधीभिश्चिन्त्यमिति। प्रयोगरत्नमालायां तृतीयविन्यासे "तृतीयाद्यास्तुर्य्यहान्ता गणोक्ता धातवो यदी"ति २४४ सूत्रेण जकारस्य झकारो विहितः। तुर्य्याद्याः स्युरिति वृत्तिः। संजभते संझन् संझप् इत्युदाहरणम्।

(१) "यादृग्जातीयस्य विप्रतिषेधो विधिरपि तादृग्जातीयस्येति न्यायादनवर्णपदेन अवर्णसजातीयोऽजेव ग्राह्यो न तु हसः। ततश्च पूर्व्वसूत्रमवर्णविषयं हसविषयञ्च, एतत् सूत्रमिवर्णाद्यज्विषयमिति बोध्य"मिति दुर्गादासः।

१८२। अनडुच्चतुरोऽणाणौ धिघ्योः।

(अनडुह्-चतुरः ६।, अण्-आणौ १॥, धिघ्योः ७॥)।

अनडुहश्चतुरश्च धौ परे अण् घौ परे आण् स्यात्, ण इत्।

१८३। हो नः सौ। (हः ६।, नः १।, सौ ७।)।

अनडुहो हस्य नः स्यात् सौ परे। अनड्वान्। हे अनड्वन्। अनड्वाहौ अनड्वाहः। अनडुहः अनडुहा।

१८४। स्रस्-ध्वस्-वस्वनडुहां दङ् फे।

(स्रस्-ध्वस्-वसु-अनडुहां ६॥, दङ् ।१।, फे ७।)।

एषां दङ् स्यात् फे परे, अङावितौ। अनडुद्भ्यामित्यादि।

---

१८२। अन। अनडुच्च चतुश्च तत् तस्य, अण् च आण् च तौ, धिश्च घिश्च तौ तयोः, अनडुच्चतुर इति द्वयोरनुकरणात् क्लम्। समाहारात् न यथासंख्यं, निमित्तविधेययोस्तु समसंख्यत्वात् स्यादेव।

१८३। हो नः। चतुरो हकाराभावादाह अनडुह इति। नकारेऽकार उच्चारणार्थः। अनड्वानिति। सूत्रद्वयं गौणेऽपि, तेन अत्यनड्वान्, प्रियानड्वान् इत्यादौ स्यात्। प्रियानड्वाहौ इति तु पद्मतीत्यादिना वा निपातनात्।

१८४। स्रस्। स्रश्च ध्वश्च वसुश्च अनड्वांश्च ते तेषाम्।

---

कार्त्तिकेयस्तु "अवर्णनिषेधात् अवर्णजातीयोऽजेव ग्राह्यो न तु हसः।**केचित्तु अनवर्णाद्भसादपि, तेन मरुद्रूह इत्याद्य"रित्याह। प्रयोगरत्नमालायां तृतीयविन्यासे च "अनवर्णाच्च जः" (३८२) इति सूत्रप्रत्युदाहरणे अचः किम् उर-

१८५। श्वेतवाहऽवयाजुक्थशास्पुरोडाशां डस्ङ्।

( श्वेतवाह—पुरोडाशां ६।।।, डस्ङ् ।१। )।

एषामन्तस्य डस्ङ् स्यात् फे परे, ङ्कावितौ।

१८६। अत्वसोऽधोः सौ घँोऽधौ।

( अतु-असः ६।, अधोः ६।, सौ ७।, घँः १।, अधौ ७। )

अत्वन्तस्यासन्तस्य च घँः स्यात् अधौ सौ परे, न तु धोः। श्वेतवाः।

---

वस्वित्युदिन्निर्देशात् चर्म्म वस्ते (१) क्विपि चर्म्मवः, सुवः, इत्यादौ न स्यात्। विढोरपवादोऽयम् (२)।

१८५। श्वेतवा। श्वेतवाश्च अवयाश्च उक्थशाश्च पुरोडाश्च ते तेषाम्। अत्वसोऽधोरित्यत्राधिकारात्तेरेवात्वन्तस्याऽसन्तस्य च घँविधानादेभ्यो डसिति न कृतम्। इदं छान्दसमिति परे।

१८६। अत्व। अतुश्च अस् च तत् तस्य, न धुरधुस्तस्य, न धिरधिस्तस्मिन्। अत्वित्युदिन्निर्देशात् गच्छन्नित्यादौ न स्यात्। गोमन्तमिच्छन् गोमान् (३) इत्यादौ तु अग्रादित्वात् धुत्वेऽपि अधुपूर्व्वस्य धुत्वाङ्गीकारात् घँः।

---

सौहः औत्वमेव। सुरसरिदौहो महेशस्य विद्युतौह इत्युदाहृतं पुरुषोत्तमेन। उरसौह इत्यत्र संज्ञापूर्व्वकत्वान्न विसर्ग इति तट्टीका।

(१) परिदधातीत्यर्थः।

(२) यथासम्भवविसर्गढकारापेक्षया विशेषविधिरयमित्यर्थः।

(३) अत्र क्योऽक्व्यादिति क्ये पश्चात् क्विपि हसाल्लोप इति क्यप्रत्ययस्य अकारयकारयोर्लोपे गोमत् इति स्थिते सौ रूपम्।

१८७। डसड्डो धौ वा।

( डसड: ६।, धौ ७।, वा ।१। )।

ङसड्डो धौ परे घों वा स्यात्। हे श्वेतवाः हे श्वेतवः। श्वेतवाहौ श्वेतवाहः, श्वेतवाहं श्वेतवाहौ श्वेतौहः श्वेतवाहः, श्वेतौहा श्वेतवाहा श्वेतवोभ्यामित्यादि।

(११२) क्विलादिति षः। तुराषाट् तुराषाड् तुरासाहौ तुरासाहः, तुरासाहं तुरासाहौ तुरासाहः, तुरासाहा तुराषाड्भ्यामित्यादि।

चत्वारः चतुरः, चतुर्भिः चतुर्भ्यः। (१११) नुमाम इति चतुर्णाम्।

१८८। रडो विः सुपि।

( रड: ६।, विः १।, सुपि ७। )।

रडो विः स्यात् सुपि परे, न त्वन्य-रेफस्य। चतुर्षु।

प्रियचत्वाः, हे प्रियचत्वः, प्रियचत्वारौ प्रियचत्वारः प्रियचत्वारं प्रियचत्वारौ प्रियचतुरः, प्रियचतुरा प्रियचतुर्भ्यामित्यादि।

---

१८७। डसड:। इदं नित्यमिति परे।

१८८। रड:। अनियमे प्राप्ते (१) नियमोऽयम्। चिकीर्षु इत्यत्र तु अरादिति विधानात् न विः (२)। कश्चिदरादिति नाह

---

(१) फे परे रेफमात्रस्य विसर्गे प्राप्ते इत्यर्थः। अतएवोक्तं सिद्धे सत्यारम्भो नियमायेति।

(२) स्यान्तस्यारादित्यत्र अरादिति भिन्नपदकरणात्। अतएवोक्तं दुर्गादासेन "स्यान्तस्यारादित्यत्र स्यान्तस्येति भिन्नपदज्ञापकात् रात् रडो लोप" इति।

(१६५) नसब्महन्न इति घंत्वे, (११९) नो लुप् । राजा, हे राजन्, राजानौ राजानः, राजानं राजानौ । (११८) अनोऽल्लोपः । राज्ञः, राज्ञा राजभ्यामित्यादि । ङौ—राज्ञि राजनि ।

(११८) अम्वस्यादित्युक्तेः ब्रह्मणः यज्वनः इत्यादि । शेषं राजवत् ।

**१८९ । हन्पूषार्य्यमेनोऽधौ सौ शौ घंः ।**

( हन्—इनः ६।, अधौ ७।, सौ ७।, शौ ७।, घंः १। ) ।

एषां घंः स्यात् अधौ सौ परे, शौ च ।

वृत्रहा हे वृत्रहन् वृत्रहणौ वृत्रहणः, वृत्रहणं वृत्रहणौ ।

**१९० । हनो क्नो घ्नो न णः ।**

( हनः ६।, क्नः ६।, घ्नः १।, न ।१।, णः १। ) ।

हनस्थाने जातस्य क्नस्य घ्नः स्यात्, तस्य च नस्य णो न स्यात् ।

---

तन्मते स्यान्तस्यारादिति नञा निर्दिष्टस्यानित्यत्वात् षलोपे रङ्-भिन्नरेफस्य न विः ।

१८९ । हन् । हञ्च पूषा च अर्य्यमा च इञ्च तत् तस्य, न धिरधिस्तस्मिन् । सिश्योरेव नियमात् वृत्रहणौ इत्यादौ नसब्-महन्न इति न घंः । हन इति क्विबन्तस्य ग्रहणं, तेन मघुहा इत्यादि । वृत्रहणाविति एकाचकोरिति नस्य णो नित्यम् । इनो ग्रहणं अतु-मन् अन्-इन्-नस्ग्रहणं अर्थवद्ग्रहणाभाव इति ज्ञापनार्थं (१) तेन यशस्वी इत्यादावपि स्यात् ।

---

(१ येन केनचित् प्रकारेण अतुमानान्तादीनां ग्रहणमिति ज्ञापनार्थमित्यर्थः

वृत्रघ्नः वृत्रघ्ना वृत्रहभ्यामित्यादि ।

एवं पूषन् अर्य्यमन् शार्ङ्गिन् यशस्विन् प्रभृतयः ।

१९१ । पूष्णो ङि ङिर्व्वा ।

( पूष्णः ५।, ङिः १।, ङिः १।, वा ।१। ) ।

पूषि पूष्णि पूषणि ।

१९२ । मघोनस्तुङ् वा क्विप्योः ।

( मघोनः ६।, तुङ् ।१।, वा ।१।, क्विप्योः ७।। ) ।

मघवन् शब्दस्य तुङ् वा स्यात् क्वौ पौ च परे, उङावितौ ।

१९३ । व्रिदचोऽह्वे नुण् घौ ।

( व्रिदचः ६।, अह्वेः ६।, नुण् ।१।, घौ ७। । )

उकारेत ऋकारेतोऽचश्च नुण् स्यात् घौ परे, न तु ह्वेः ।

---

१९० । हनो । हन्निति क्विबन्तस्य ग्रहणात् अघ्नीत्यादौ न स्यात् । वृत्रघ्न इति एकाच्-कृत्वात् नित्यं णत्वनिषेधः ।

१९१ । पूष्णः । इदं नेच्छन्ति परे ।

१९२ । मघोनः । क्विश्च पिश्च तौ तयोः । वाशब्दस्य व्यवस्थावाचित्वात् मघवद्वज्जलज्जानिदानमित्यत्र से क्वेर्लुक्यपि स्यात् (१) ।

१९३ । व्रिद । उश्च ऋश्च वृ, स इत् यस्य स व्रित्, व्रिच्च

---

(१) अत्र दुर्गादासोऽपि क्वौ परे विहितत्वात् समासे क्वेर्लुकि त्यलोपे त्यलक्षणमिति न्यायेन प्राप्तव्यकार्य्यस्य लुकि न तन्नेति निषेधेऽपि नञा निर्द्दिष्टमनित्यमिति न्यायात् मघवतो भक्तिः मघवद्भक्तिरित्यादि स्यादिति केचित् । अतएव मघवद्वज्जलज्जानिदानमिति दुर्गसिंहधृतमित्याह ।

१९४। स्यान्तस्यारात्लुप् फे।

( स्यान्तस्य ६।, अरात्, ५।, लुप् ।१।, फे ७। )

स्यस्यान्तस्य लुप् स्यात् फे परे, न तु रात् परस्य।

मघवान् मघवा, हे मघवन्, मघवन्तौ मघवानौ मघवन्तः मघवानः, मघवन्तं मघवानं मघवन्तौ मघवानौ।

---

अच्च तत् तस्य। अजिति क्विबन्ताच्ग्रहणात् तिर्य्यङ् उदङ् इत्यादि (१)। त् चासौ द्विश्चेति द्विः, न द्विरद्विस्तस्य; तथाच तान्तद्वेर्नुण् न स्यात् इत्यर्थः, (२) तेन ददत् जागरिष्यत् इत्यादौ न स्यात्, जगन्वान् जजागृवान् इत्यादौ तु स्यादेव। गोमन्तमिच्छन् गोमान् इत्यादौ पूर्व्वोदित्त्वमाश्रित्य स्यात्॥

१९४। स्यान्त। स्यस्यान्तः स्यान्तस्तस्य, न रः अरस्तस्मात्। कथं चिकीर्षुं इति? षस्य रङि ढ्रोढ्रि इति रे रलोपे

---

(१) "अच् इति अञ्चुगतिपूजनयोरित्यस्य गतावर्थे क्विपि लुप्तनकारस्य ग्रहणं, तेन प्राङ् प्राञ्चौ इत्यादि, अन्यत्र वह्वच् इत्यादि। * * * नञ् इह वस्तार्थ एव। तेनायमर्थः—द्वेः परस्य शत्रन्तस्यैव नुण् न स्यात्, अन्यस्य तु स्यादेवेति। यथा ददत् दधत् पापचत् बोभुवत् जक्षत् जाग्रदित्यादि। बुभूषन् चिकीर्षन्नित्यादौ तु लोपोऽतोऽद्वेचोरित्यनेन कृतस्य शपो लोपस्य स्थानिवत्त्वात् द्वेः परत्वाभावे नुण् स्यादेव। न च ददद्दित्यादावपि लुगह्व्रोऽप इत्यनेन कृतस्याकारलोपस्य स्थानिवत्त्वात् नुणापत्तिरिति वाच्यम्। लोपोऽस्योमाङोरिति [illegible] इत्य- [illegible] लोपोऽधितोत्येतेभ्योऽन्यस्तेन कृतस्य अकारलोपस्य स्थानिवत्त्वा[illegible] अस्य वीजं सकोऽल्लोपोऽप्यव्व इत्यत्र द्रष्टव्यम्। द्वेः [illegible] जजागृवान् जग्मिवान् जगन्वान् वावदिष्यन् [illegible]

(२) येन विधिस्तदन्तस्येति न्यायात् [illegible]

१८५ । श्व-युव-मघोनामुर्व्वोऽते पौ ।

( श्व-युव-मघोनां ६।।।, उः १।, वः ६।, अते ७।, पौ ७। ) ।

एषां वशब्दस्य उः स्यात् पौ परे, न तु ते ।

मघवतः मघोनः, मघवता मघोना, मघवद्भ्यां मघवभ्यामित्यादि ।

शुनः शुना । यूनः यूना इत्यादि ।

---

अरादिति न विः । चतुरित्यत्र फे रेफसकारयोर्विसर्गः (१) । नञा निर्द्दिष्टस्यानित्यत्वात् रेफात् शसो लोप इति कश्चित् ।

मघवानिति(२)—नस्य त्रादेशे मघवानिति परे । छान्दसमिति चान्द्राः । यदुक्तं भाष्ये—"अर्व्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि त"दिति (३) भाषायां प्रयोगदर्शनादेवानेन तुङिति कृतम् । तथाच—हविर्जक्षिति निःशङ्को मखेषु मघवानसौ इति भट्टिः । पौ मघवतीत्यादि वक्ष्यति ।

१८५ । श्वयुव । श्वा च युवा च मघवा च ते तेषाम् । मघोनामिति नान्तनिर्द्देशात् नान्तानामेव, तेन मघवत इत्यादौ तुङि माभूत् । न तः अतस्तस्मिन् । गौणेऽप्ययं विधिः, तेन प्राप्तशुनः वृद्धयूनः अतिमघोनः बहुयून इत्यादौ स्यात् । ते तु यौवनम् इत्यादि वक्ष्यति ।

---

(१) १०२ सूत्रस्य टीका द्रष्टव्या ।

(२) मह्यते पूज्यते इत्यवनन्तो निपातः । धातुपारायणे तु मघो यागस्तद्योगान्मतुबित्यमरटीकायां रघुनाथः ।

(३) एवं चार्व्वन् मघवन् शब्दस्य भाषायां नास्ति प्रयोग इत्युक्तं भवति"—इति भाष्यटीकायां कैयटः ।

## १९६। अर्व्वणोऽनञस्तुङ् त्येऽसौ तु।

(अर्व्वणः ६।, अनञः ६।, तुङ् ।१।, त्ये ७।, असौ ७।, तु ।१।)।

नञ् वर्जस्यार्व्वणो नस्य तुङ् स्यात् असौ त्ये परे।

अर्व्वन्तौ अर्व्वन्तः, अर्व्वन्तम् अर्व्वन्तौ अर्व्वतः, अर्व्वता अर्व्वद्भ्याम् इत्यादि। अनञः किम्—अनर्व्वा हे अनर्व्वन्, अनर्व्वाणौ अनर्व्वाणः, इत्यादि। शेषं यज्ववत्।

## १९७। पथिमथ्यृभुक्षां थितोर्नसौ घौ।

( पथि-मथि-ऋभुक्षां ६।।।, थ-इतोः ६।।, नसौ १।।, घौ ७। )।

पथिन् मथिन् ऋभुक्षिन् एषां थस्य नम् स्यात्, इकारस्य चाकारः, घौ परे।

---

१९६। अर्व्व। न विद्यते नञ् यस्य स तस्य, न सिरसिस्तस्मिन्। त्यसामान्यग्रहणात् अर्व्वतौ, अर्व्वत इदम् आर्व्वतम्, अर्व्वन्तमिच्छति अर्व्वत्यति इत्यादौ स्यात्। सहस्रदृगर्व्वगर्व्व (१) इति तु से तोर्लुकि लुकि न तत्रेति निषेधः। केचित्तु अर्व्वन्तं गतः अर्व्वद्गत इत्यादौ से तोर्लुक्यपि स्यादित्याहुः (२)।

१९७। पथि। पन्थाश्च मन्थाश्च ऋभुक्षाश्च ते तेषाम्। थश्च इश्च तौ तयोः, नम् च अश्च तौ। गौणेऽपि अयं विधिः, तेन अपन्थाः अतिपन्थाः इत्यादौ स्यात्।

---

(१) सहस्रदृक् इन्द्रस्तस्य अर्व्वा घोटकस्तस्य गर्व्व इत्यर्थः।

(२) स्वमते तु तोर्लुकि लुकि न तत्रेति निषेधेऽपि नञा निर्दिष्टमनित्यमिति न्यायात् समाधानीयमिति दुर्गादासः।

१९८। **टेरासौ।** ( टेः ६।, आ ।१।, सौ ७। )।

पथ्यादीनां टेरा स्यात् सौ परे। पन्थाः पन्थानौ पन्थानः, पन्थानं पन्थानौ।

१९९। **लोपोऽच्यघौ।**

( लोपः १।, अचि ७।, अघौ ७। । )

पथ्यादीनां टे र्लोपः स्यात् अघावचि परे।

पथः पथा पथिभ्यामित्यादि। एवं मन्थाः, ऋभुक्षाः।

(१३२) डतिसङ्ख्याष्ण इति। पञ्च पञ्च पञ्चभिः पञ्चभ्यः पञ्चभ्यः।

---

१९८। टेः। नान्तत्वात् घें सिद्धे टेराविधानात् (१) पन्थाः इत्यादौ न सेर्लोपः। ङः साविति कृते सिद्धे (२) टिग्रहणं परसूत्रार्थम्।

१९९। लोपः। न घिरघिस्तस्मिन्। अचिग्रहणेन नञ्-युक्तवन्न्यायेन स्याद्यचेव, तेन पथ्यश्वौ ऋभुक्षिणौ स्त्रीत्यादौ न स्यादिति कश्चित्। उत्सर्गापवादयोः क्वचित् उत्सर्गोऽपि निविशते इति न्यायात् क्वचित् घावचि प्राप्तटिलोपनिवारणार्थमित्यन्यः। पूर्व्ववत् गौणेऽपि, तेन सुपथी कूले इत्यादौ स्यात्।

---

(१) लोपस्वरादेशयोः स्वरादेशो विधिर्बलवानिति न्यायादिति शेषः।

(२) सौ परे पथ्यादीनां ङे इकारस्य चाकारे यद्यपि पन्थाः इत्यादयः सिध्यन्ति तथापीत्यर्थः।

२००। नो नामि घं:।

( नः ६।, नामि ७।, घं: १। )।

नान्तस्य नामि परे घं: स्यात्। पञ्चानां, पञ्चसु।

२०१। वाष्टनो जस्शसो डौं:।

( वा।१।, अष्टनः ५।, जस्शसोः ६॥, डौः १। )।

अष्टनः परयो र्जस्शसो र्डौं: स्यात् वा, ड इत्।

अष्टौ अष्ट, अष्टौ अष्ट।

२०२। ङा त्तौ वा। (ङा।१।, त्तौ ७।, वा।१।)।

अष्टनो ङा स्यात् वा त्तौ परे, ङ इत्। अष्टाभिः अष्टभिः, अष्टाभ्यः अष्टभ्यः, अष्टाभ्यः अष्टभ्यः, अष्टानाम्, अष्टासु अष्टसु।

---

२००। नोना। लुपि नाद्यविधिरिति निषेधे प्राप्ते विधिरयम्। गौणे नुमभावात् घंाभावस्तेन प्रियपञ्चामित्येव स्यात्।

२०१। वाष्टनः। जश्च शश्च तौ तयोः। विधानसामर्थ्यात् लुक् वाध्यते, डावभावपक्षे जस्शसोर्लुक्। एवं परमाष्टौ परमाष्ट। मुख्य एवायं विधिस्तेन प्रियाष्टानो विप्रा इत्यादौ न स्यात्।

२०२। ङा। स्मि इति कृते सिद्धे त्तिग्रहणात् गौणेऽपि ङा वा, तेन सौ प्रियाष्टाः पक्षे प्रियाष्टा, औकारे प्रियाष्टौ प्रियाष्टानौ, जसि प्रियाष्टाः प्रियाष्टानः, अमि प्रियाष्टां प्रियाष्टानं, शसि प्रियाष्टाः प्रियाष्ट्नः, टादित्तौ प्रियाष्टा प्रियाष्ट्ना, प्रियाष्टाभ्यां प्रियाष्टभ्याम् इत्यादि। ङौ प्रियाष्टे प्रियाष्ट्नि, प्रियाष्टनि। तत्राष्टापदं शातकुम्भं… साष्टे शते सुवर्णानामित्यमरः।

## २०३। धोर्मो नः फम्वि।

( धोः ६।, मः ६।, नः, १।, फम्वि ७। )।

धो र्मस्य नः स्यात् फे मे वे च परे। प्रशान् प्रशामौ प्रशामः, प्रशामं प्रशामौ, प्रशान्भ्यामित्यादि।

## २०४। इदमोऽयमियं पुंस्त्रियोः सौ।

( इदमः ६।, अयम्-इयम् ।१।, पुंस्त्रियोः ७।।, सौ ७। )।

इदमः पुंलिङ्गस्त्रीलिङ्गयोः क्रमेणायमियमौ स्तः सौ परे। अयम्।

## २०५। दोमोऽदसश्च क्तौ।

( दः ६।, मः १।, अदसः ६।, च ।१।, क्तौ ७। )।

इदमोऽदसश्च दस्य मः स्यात् क्तौ परे।

इमौ इमे, इमम् इमौ इमान्।

---

२०३। धोः। फश्च, म च, व च, तत् तस्मिन्। मवयोर्यथा- जंगन्मि, जंगन्वः जंगन्मः जगन्वान् इत्यादि।

२०४। इदमः। अयञ्च इयञ्च तौ। लुप्तमौदम् (१)। मान्त-निर्द्देशात् न टेरः। पुमांश्च स्त्री च ते तयोः। परसूत्रेऽनकग्रहणात् अनेन साकोऽप्यादेशौ। इदंविप्रः इदंस्त्रीति से तोर्लुकि लुकि न तत्रेति निषेधः। स्त्रिसंज्ञस्यैव विधानात् अतीदम् इत्यादौ न स्यात्। एवं परत्रापि।

२०५। दो। असावित्यत्र परत्वात् सः (२)।

---

(१) पुंस्त्रियोरित्यनेन यथासंख्यार्थम्।

(२) विप्रतिषेधे परं कार्य्यमिति न्यायादित्यर्थः। दुर्गादासस्तु अत्र सर्व्व-विभक्तिविषयकस्य दोमोऽदसश्चेत्यस्य बाधकेन त्यदां तदोरित्यनेन दस्य स एवेत्याह।

२०६। टौसीदमोऽनकोऽनः।

( टा ओसि ७।, इदमः ६।, अनकः ६।, अनः १। )।

अनक इदमः टौसोः परयोरनः स्यात्। अनेन।

२०७। स्भ्यः। ( स्भि ७।, अः १। )।

अनक इदमः अः स्यात् से भे च परे।

(१०९) आत्मिभम्वि। आभ्यां।

२०८। भिस् भिसोऽदसश्च।

( भिस् ।१।, भिसः ६।, अदसः ५।, च ।१। )।

अनक इदमोऽदसश्च परस्य भिसो भिसेव स्यात्, नत्वैस्।

(११०) व्वे स्भ्येः। एभिः। (१३४) टेरत्वे, (२०५) दस्य मत्वे, (११३) ङे स्मै, पश्चात् (२०७) अः। अस्मै आभ्याम् एभ्यः, अस्मात् आभ्याम् एभ्यः, अस्य अनयोः एषाम्, अस्मिन् अनयोः एषु।

अनकः किम्—

---

२०६। टौसी। टाश्च ओश्च तत् तस्मिन्, नास्ति अक् यस्य सः तस्य। इदमो ग्रहणम् अदसो निवृत्त्यर्थम्।

२०७। स्भ्यः। स च भच तत् तस्मिन्। व्युत्क्रमनिर्देशात् लाक्षणिकस्यापि, तेन अस्मै एषामित्यादौ स्यात् (१)।

२०८। भिस्। अनक इत्यस्यादस इत्यत्रान्वयः, तेन अमुकै-

---

(१) "अत्र अनक इति नञोऽल्पार्थत्वात् अनक्कौ सभयोः परयोरिमकस्यापि च आदेशः। यथा—इमकस्मै धनं देहि अथ अस्मै भूमिं देहि, इमकाभ्यां वेदो-

त्वकतोरित्याह (१)। त्यादिव्ययोस्तावत् भवतकि पचतकि उच्चकैः धकित्, हिरकुत्, अतकि, वकि, इवक इत्यादि। अभिधानात् अल्पादौ ज्ञेयम्।

यथा—अल्पाज्ञात-दया-ह्रस्व-कुत्साखक् स्यात् प्रयोगतः।
अनुकम्पायुतान्नीतौ बहूणां जातिप्रश्नके॥

अल्पमुच्चैः उच्चकैः, अज्ञातोऽसौ कस्य कीदृशो वा असकौ, दयायां--पचति पचतकि, ह्रस्वः असौ असकौ, कुत्सिताः सर्व्वे सर्व्वके, नीतौ—(२) हन्त ते सर्व्वके, हन्तशब्दोऽनुकम्पार्थः, भोः शोकार्त्ताः सर्व्वे तद्दत्यर्थः। भवतां कतमः कठः कतमक इत्यादि। मगित्यकरणात्(३) किं-सामिशब्दयोष्टेः प्रागक् न स्यात्। तेन कः, सामि (४) इत्यादौ न स्यात्। युष्मकभ्यं अस्मकभ्यं इत्यत्र स्वेष्टेः प्रागक्। ङभ्यम् इति कृतेपि भकारस्थानजत्वात् भोपलक्षितत्वात् वा (५)।

तूष्णीमः काण् शीले तु कङ्। तूष्णीम्शब्दस्य काण् स्यात्, शीले तु कङ्, णङावितौ। तूष्णीकामासते विप्राः, तूष्णीकः तूष्णींशीलः। अग्बाधनार्थमिदमिति।

---

(१) सर्व्वविश्वेति सूत्रे "परे त्वच्छब्दं नाङ"रित्युक्तमत आह कश्चिदिति।

(२) नीतिः सदाचारव्यवस्थितार्थेन प्रवृत्तिनिवृत्ती इति संक्षिप्तसारे सुबन्तपादे २८६ सूत्रस्य टीकायां गोयीचन्द्रः।

(३) टेर्मक् इत्युक्ते मित्त्वात् पूर्व्वमकि सिद्धेऽपि तदकरणादित्यर्थः।

(४) सामि इत्यव्ययम्।

(५) विभक्त्यन्तस्वेष्टेः पूर्व्वोऽक् माभूदिति शेषः।

२११। युजिरोऽसे नुण् घौ।

( युजिरः ६।, असे ७।, नुण् ।१।, घौ ७। )।

युजिरो युज्शब्दस्य नुण् स्यात् घौ परे, न तु से।

२१२। चुङ् क्रुङ् युङ् स्रग् दिगस्तृग्ऋत्विक् दधृक् दृक् स्पृक् सृगुष्णिहां कङ् भौ।

( चुङ्—उष्णिहां ६।।।, कङ् ।१।, भौ ७। )।

चवर्गान्तानामञ्चादीनाञ्च कङ् स्यात् भौ परे।

(५१) ञ्णोर्नुर्भस्यदान्ते। (५२) ञपि ञम् नोः। (१९४) स्यान्तस्याराल्लुप् फे। युङ् युञ्जौ युञ्जः, युञ्जं युञ्जौ युजः, युजा युग्भ्यामित्यादि।

असे किं—सुयुक् सुयुजौ सुयुजः इत्यादि। युजिरः किं—युक् समाधिमान्। अन्च-क्रुन्च-युजामेव प्राक् कङ् पृथग्ग्रहणात्, तेन—खन् खञ्जौ खञ्जः इत्यादि।

(१५५) भ्रच्छ्राजेति षङ्। (१५६) षोड़ः फे। राट् राड् राजौ राजः। एवं विभ्राट् देवेट् परिव्राट् विश्वसृट् परिमृट्।

---

२११। युजिरः। न सः असस्तस्मिन्। इरिनिर्देशात् युजिर्ँ ञ युताविव्यस्य ग्रहणं, न तु युज्यौञ समाधाविव्यस्येति वक्ष्यति युक् समाधिमान्।

२१२। चुङ्। अङित्यनेन पूजार्थस्याञ्चतेः, नुणि गत्यर्थस्यापि ग्रहणं। पृथग्ग्रहणादिति—चवर्गान्तत्वेन सिद्धे अञ्चादीनां पृथग्ग्रहणं नियमार्थं, तेन खन् इत्यादौ आदौ स्यान्तलुप्, न

२१२। विश्वराजोऽदा।

( विश्वराजः ६।, अत्।१।, आ।१। )।

विश्वराजोऽकारस्य आ स्यात् भौ परे।

विश्वाराट् विश्वाराड् विश्वराजौ विश्वराजः।

---

काङ् (१)। स्रगिति सृजधोः क्विपि निपातितस्यैव ग्रहणात् स्रष्टेत्यादौ न स्यात्। एवं दिशधोरपि, तेन दिष्टमित्यादि। असृगिति नञ्-पूर्व्व-सृजधोः क्विबन्तस्य ग्रहणात् रज्जुसृडिति स्यात्। विश्वसृग्विधिरिति तु उत्सर्गत्वात् अपवादविषयेऽपि काङ्। ऋतौ यजति ऋत्विग्, अन्यत्र देवेट्। दधृगिति धृषधोः क्विपि निपातितस्य ग्रहणात् ग्रकधृट् धृष्टमित्यादौ न स्यात्। दृगिति दृशधोः क्विबन्तस्य ग्रहणात् दृक् सदृक् कीदृक् इत्यादौ स्यात्, न तु दृष्टमित्यादौ। एवं स्पृशधोः क्विपि स्पृक् घृतस्पृक्। अन्यत्र स्पृष्टमित्यादि। एवं मृशधोः क्विपि मृक्, अन्यत्र मृष्टमित्यादि। देवान् यजतीति क्विप्, ग्रहस्वपाद्योरिति जिः। परिव्रजतीति क्विपि निपातनात् घँः।

२१३। विश्व। भावित्यनुवर्त्तते।

---

(१) कङ् इत्यत्र दुर्गादासेन कुङ् इत्युक्ता "रामानन्दकाशीश्वरौ तु कङित्युकारशून्यं मत्वा रुग्णभुग्नादिसाधनाय "क्तक्तवत्वोस्तस्य नत्वे जस्य ग" इति सूत्रं कल्पयतः। वस्तुतस्तु रुग्णःभुग्न इत्यादौ निरवकाशत्वादन्तरङ्गत्वाच्च आदौ चुङ् इत्यादिना जकारस्य गकारे पश्चात्तकारस्य नकार" इत्युक्तम्। तर्कवागीशेन तु रुग्णःभुग्न इत्यादौ न्यङ्क्वादित्वात् जस्य ग इति चजोः कगाविति सूत्रे वक्ष्यते इति।

## २१४। स्यादेः सो लोपः कोऽषढ़न्यरचः।

( स्यादेः ६।, सः ६।, लोपः १।, कः ६।, अषढ़न्यरचः ६। )।

स्यादौ स्थितस्य सस्य लोपः स्यात् भौ परे, कस्य च—न तु षढ़ाभ्यामन्यस्य स्थाने जातस्य रचश्च।

भृट् भृड्। (६५) झपझसोरिति सस्य दः, (४७) सुश्रुभिश्वशादिति—भृज्जौ भृज्जः इत्यादि। ऊर्क् ऊर्ग् ऊर्ज्जौ ऊर्ज्जः इत्यादि, ऋत्विक् ऋत्विग् ऋत्विजौ ऋत्विजः इत्यादि। अवयाः, हे अवयाः हे अवयः, अवयाजौ अवयाजः, अवयोभ्यामित्यादि।

## २१५। त्यदां तदोः सः सौ।

( त्यदां ६।॥, तदोः ६।।, सः १।, सौ ७। )।

---

२१४। स्यादेः। भाविल्यनुवर्त्तते। स्यस्यादिः स्यादिस्तस्य। षश्च ढ़श्च तौ षढ़ौ, ताभ्यामन्यः षढ़न्यः, षढ़न्यश्च रचश्च तत्, न तत् अषढ़न्यरच तस्य। तथाच षढ़स्थानजातस्य रचभिन्नाजातस्य च कस्य लोप इत्यर्थः, तेन विविट् लिलिट्, अचधोः माचीत् इत्यादौ स्यात्। न तु पिपक् गोरक इत्यादौ। अन्ये तु गोरट् इत्याहुः। अमाङ्चीत् इत्यादौ तु सर्व्वविधिभ्यो लोपविधिर्बलवान् इति न्यायात् आदौ स्यादिलुपि नुणि जम्। कस्वाता शक्स्याता इत्यादौ तु सकयोर्दान्तत्वान्न लुप् स्यात् (१)। ऊर्क् इति रेफान्न स्यान्तलुप्। एवं झर्भ्झ माचचाक्षः भर्क् इत्यादि।

---

(१) एतद्बीजं च [illegible] टीकायां द्रष्टव्यम्।

त्यदादीनां तदयोः सः स्यात् सौ परे। स्यः त्यौ त्ये इत्यादि सर्व्ववत्। एवं तद्। एषः एतौ एते इत्यादि।

(२१०) ह्वौटौसौदैतयोरेनोऽनूक्ताविति प्रयोगस्तु इदंवत्।

**२१६। युष्मदस्मदो स्त्वाहौ युवावौ यूयवयौ त्वन्मदौ तुभ्यमह्यौ तवममौ सि-द्व-जस्-क्वा-ङे-ङस्सु।**

( युष्मद्-अस्मदोः ६॥, त्व-अहौ १॥, युव-आवौ १॥, यूय-वयौ १॥, त्वद्-मदौ १॥, तुभ्य मह्यौ १॥, तव ममौ १॥, सि द्व-जस्-क्व-ङे-ङस्सु ७॥ )।

अनयोः क्रमादेते आदेशाः एषु परेषु क्रमात् स्युः।

---

२१५। त्यदां। ब्वनिर्द्देशो गणार्थः। स्निसंज्ञस्यैव विधानात् अतितदित्यादौ न स्यात्। मण्डूकगत्या वा अनुवर्त्त्य तस्य व्यवस्थावाचित्वात् सेरौत्वाभावे साकोऽदसः सो वा, तेन असुकः अमुक इति। इदंवदिति—इमं विद्धीत्यादिक्रमेण ज्ञेयमित्यर्थः।

२१६। युष्मद। क्वद्वयोरर्थस्यापि ग्रहणात् इति वक्ष्यति। तत्र त्वन्मदौ युवावौ च क्वावेव, क्वौर्लुक्यपि त्वन्मदादेशः त्वन्मदामिति निर्द्देशज्ञापकात् (१)। तेन तव-समीपं उपत्वत् त्वय्यधि अधित्वत्, अत्वं त्वं भवति त्वद्भवति त्वत्काम्यति त्वयति त्वद्यते त्वदतीत्यादि स्यात्। न तु युवाभ्यां क्वतं युष्मत्क्वतं युवयोरधि अधियुष्मत्,

---

(१) तद्धितप्रकरणे युष्मदस्मद्त्वन्मदामिति सूत्रे युवावेत्यनुक्त्वा त्वन्मादिति निर्द्देशेन विभक्तौर्लुकि युष्मदस्मदोर्द्वित्वे-युवावादेशौ न स्त इति ज्ञापकादित्यर्थः।

२१७। ङेघ्योर्मः। ( ङेघ्योः ६॥, मः १। )।

युष्मदस्मद्भ्यां परस्य ङे इत्यस्य घेश्च मः स्यात्। त्वम् अहम्।

२१८। सभमौष्वाङ्।

( स-भ-अम्-औषु ७॥, आङ् ।१। )।

युष्मदस्मदोराङ् स्यात् से भे अमि औकारे च परे।

युवाम् आवाम् यूयं वयं, त्वां मां युवाम् आवाम्।

२१९। शस्-भ्यस्-ङसि-भ्यस्-ङस्-सामां न-डभ्यम्-त-त-डाकमः।

( शस्—सामां ६॥, न—आकमः १॥ )।

युष्मदस्मद्भ्यां परेषामेषां स्थाने न डभ्यम् त त ड आकम् एते क्रमात् स्युः, ड इत्। युष्मान् अस्मान्।

---

युष्मत्काम्यतीत्यादौ। एवं अस्मदोऽपि। द्वार्थत्वार्थयोरप्युदाहराणि ज्ञेयाणि।

२१७। ङे। मेऽकार उच्चारणार्थः।

२१८। सभ। सश्च भच अम्च औश्च ते तेषु। व्युत्क्रमनिर्द्देशात् त्वं अहं युष्मत् अस्मत् इत्यादौ सभयोर्म-तौ, नाङ्।

२१९। शस्। शश्च भ्यश्चेति चः। एवं नश्च डभ्यश्चेति। न-तयोरकार उच्चारणार्थः। साम्ग्रहणात् न गौणे आकम्, तेन अतित्वयामित्यादौ न स्यात्। शस्ग्रहणं स्त्रीक्लीवयोर्विधानार्थं(१), तेन स्त्रीः कुलानि वा युष्मान् पश्यति इत्यादौ स्यात्।

---

(१) "इति-व्य-प्रेत्यादिना लिङ्गविहितकार्य्यनिषेधात् पुंसि तु शस् न इत्यस्याप्राप्तौ त्रिषु लिङ्गेषु शसो नविधान"मिति दुर्गादासः।

## २२०। एङ् टाङ्याम्मि।

(एङ्।१।, टा-ङि-आमि ७। )।

युष्मदस्मदोरेङ् स्यात् टाङ्योः परयोरामि च, ङ इत्।

त्वया मया युवाभ्याम् आवाभ्यां युष्माभिः अस्माभिः, तुभ्यं मह्यं युवाभ्याम् आवाभ्यां युष्मभ्यम् अस्मभ्यं, त्वत् मत् युवाभ्याम् आवाभ्यां युष्मत् अस्मत्, तव मम युवयोः आवयोः युष्माकम् अस्माकम्।

अतित्वयाम् अतिमयाम् अतियुवयाम् अत्यावयाम् अतियुष्मयाम् अत्यस्मयाम्।

(२१६) क्त-द्वयोरर्थस्यापि ग्रहणात्। एवं सर्व्वत्र।

त्वयि मयि युवयोः आवयोः युष्मासु अस्मासु।

---

२२०। एङ्। मुख्ये सुमि आकम्विधानात् गौणेऽस्य विषयः। क्तद्वयोरर्थस्यापि ग्रहणादिति—अपिशब्दोऽत्रावधारणार्थ-स्तयाच—क्तार्थयोर्युष्मदस्मदोस्त्वन्मदौ, द्वार्थयोर्युष्मदस्मदोर्युवावौ तावेव स्यातां, न तु सि-जस्-ङे-ङस्सु, विशेषविधानात्(१), तेन त्वामतिक्रान्तः अतित्वं, त्वामतिक्रान्तौ अतित्वां, त्वामति-

---

(१) अत्र दुर्गादासः—'ननु बहुवचने परे त्वदाद्यादेशः कथमित्यागङ्क्याह क्तद्वयोरर्थस्यापि ग्रहणादिति। तत्रायमर्थः—युष्मदस्मदोर्मुख्यत्वे गौणत्वे च सि-जस्-ङे-ङसां स्वरूपग्रहणात् तेषु परेषु त्वाहं-यूय-वय-तुभ्य-मह्य-तव-ममाः स्युरेव। सि-जसादे-रन्यत्र युष्मदस्मदोर्मुख्यत्वे एकवचने परे त्वन्मदौ द्विवचने परे युवावौ बहुवचने परे स्वरूपेणावस्थानम्। गौणत्वे तु परविभक्तिमनादृत्य युष्मदस्मदोरेकत्वे त्वन्मदौ द्वित्वे युवावौ बहुत्वे स्वरूपेणावस्थान'मिति।

| | | |
|---|---|---|
| [illegible] a, Fasc. 5-7 @ /10/ each ... ... | Rs. 1 | 14 |
| [illegible], Fasc. 10-19 @ /10/ each ... ... ... | 6 | 4 |
| Nyāyavārtika, Fasc. 1--6 @ /10/ each ... ... ... | 3 | 12 |
| *Nirukta, Vol. IV. fasc. 1-8 @ /10/ each ... ... ... | 5 | 0 |
| *Nitisara, Fasc. 3-5 @ /10/ each .. ... ... ... | 1 | 14 |
| Nityācārapaddhatiḥ, Fasc. 1--7 @ /10/ each ... ... | 4 | 6 |
| Nityācārapradīpaḥ Vol. I. Fasc. 1--8 ; Vol. II, Fasc. 1-3. @ /10/ each ... | 6 | 14 |
| Nyayabinduṭīkā, Fasc. 1 @ /10/ each ... | 0 | 10 |
| *Nyāya Kusumāñjali Prakaraṇa Vol. I, Fasc. 2--6 ; Vol. II, Fasc. 1--3 @ /10/ each ... ... ... ... ... | 5 | 0 |
| Nyayasarah ... ... ... ... ... ... | 2 | 0 |
| Padumawati, Fasc. 1- 5 @ 2/ ... ... ... ... | 10 | 0 |
| *Pariçiṣṭa Parvan, Fasc. 3--5 @ /10/ each ... ... ... | 1 | 14 |
| Prākrita-Paingalam, Fasc. 1--7 @ /10/ each ... ... ... | 4 | 6 |
| Prithivirāj Rāsa, Part II, Fasc 1--5 @ /10/ each ... ... ... | 3 | 2 |
| Ditto (English) Part II, Fasc. 1 @ 1/- .. ... ... | 1 | 0 |
| Prākrta Lakṣaṇam Fasc. 1 @ 1/8/ each .. ... .. ... | 1 | 8 |
| Parāçara Smṛti, Vol. I, Fasc. 1--8 ; Vol. II, Fasc. 1--6 ; Vol III, Fasc. 1--6 @ /10/ each ... ... ... ... | 12 | 8 |
| Parāçara, Institutes of (English) @ 1/- each ... ... ... | 1 | 0 |
| Pariksamukha Sutram ... .. ... ... ... | 1 | 0 |
| Prabandhacintāmaṇi (English) Fasc. 1--3 @ 1/4/ each ... ... | 3 | 12 |
| Rasarnavam, Fasc. 1-3 .. .. ... .. ... | 3 | 12 |
| Saddarsana-Samuccaya, Fasc. 1-2 @ /10/ each ... ... ... | 1 | 4 |
| Samaraieca Kaha Fasc. 1-3, @ /10/ ... ... ... ... | 1 | 14 |
| Sāṅkhya Sūtra Vṛtti, Fasc. 1--4 @ /10/ each ... ... ... | 2 | 8 |
| Ditto (English) Fasc. 1--3 @ 1/- each ... ... | 3 | 0 |
| *Sankara Vijaya, Fasc. 2-3 @ /10/ each ... ... ... | 1 | 4 |
| Six Buddhist Nyaya Tracts. ... ... ... ... .. | 0 | 10 |
| Srāddha Kriyā Kaumudī, Fasc. 1-6 @ /10/ each ... ... ... | 3 | 12 |
| Sragdharā Stotra ( Sanskrit and Tibetan ) ... ... ... | 2 | 0 |
| Suçruta Saṁhita, (Eng.) Fasc. 1 @ 1/- each ... ... ... | 1 | 0 |
| Suddhikaumudī, Fasc 1-4 @ /10/ each ... ... ... ... | 2 | 8 |
| Sundaranandam Kavyam .. ... ... ... ... | 1 | 0 |
| Suryya Siddhanta fasc. 1 ... ... ... ... ... | 1 | 4 |
| Syainika Sastra ... ... ... ... ... ... | 1 | 0 |
| *Taittreya Brahmana, Fasc 11-25 @ /10/ each ... ... | 9 | 6 |
| ,, Pratisakhya, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 4 |
| *Taitteriya Saṁhitā, Fasc. 27-45 @ /10/ each ... ... ... | 11 | 14 |
| Tāṇḍya Brāhmaṇa, Fasc 10--19 @ /10/ each ... ... ... | 6 | 14 |
| Tantra Vārteka (English) Fasc. 1-8 @ 1/4/ each ... ... | 10 | 0 |
| Tattva Cintāmaṇi, Vol. I, Fasc. 1--9, Vol II, Fasc 1--10, Vol. III, Fasc 1--2, Vol. IV, Fasc. 1, Vol. V, Fasc. 1--5, Part IV. Vol. II, Fasc. 1-12 @ /10/ each | 24 | 6 |
| Tattva Cintamani Didhiti Vivriti, Fasc, 1, @ /10/ each ... .. | 0 | 0 |
| Ditto Prakas, fasc. 1-2, @ /10/ each ... ... | 1 | 4 |
| Tattvārthadhigama Sutram, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Tirthacintamoni, fasc, 1, @ /10/ each ... ... ... | 0 | 10 |
| Trikāṇḍa-Maṇḍanam, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Tul'si Satsai, Fasc. 1--5 @ /10/ each ... ... .. ... | 3 | 2 |
| *Upamita-bhava-prapañca-kathā, Fasc. 1-2, 5-13 @ /10/ each ... ... | 6 | 14 |
| Uvāsagadasāo, (Text and English) Fasc. 1--6 @ 1/- each ... ... | 6 | 0 |
| Vallāla Carita, Fasc 1 @ /10/ ... ... ... ... | 0 | 10 |
| Varṣa Kriyā Kaumudī, Fasc 1--6 @ /10/ each ... .. ... | 3 | 12 |
| *Vāyu Purāṇa, Vol. I, Fasc. 3--6 ; Vol. II, Fasc. 1--7, @ /10/ each ... | 6 | 14 |
| Vidhāna Pārijata, Fasc. 1--8 Vol. II Fasc. I @ /10/ each ... ... | 5 | 10 |
| Ditto Vol. II, Fasc. 2-4 @ 1/4/ ... ... ... | 3 | 12 |
| Vivādaratnākara, Fasc. 1--7 @ /10/ each ... ... ... | 4 | 6 |
| Vṛhat Svayambhū Purāṇa, Fasc. 1--6 @ /10/ each ... ... ... | 3 | 12 |
| *Yoga Aphorisms of Patanjali, Fasc. 3-5 @ /10/ each ... ... | 1 | 14 |
| Yogasāstra of Hemchandra Vol. I. Fasc. 1-3 ... ... | 3 | 12 |
| *Tibetan Series.* | | |
| Baudhyastotrasangraha, Vol. I ( Tib. & Sans. ) ... ... ... | 2 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1--4 @ 1/- each ... ... | 4 | 0 |
| Nyayabindu of Dharmakirti, Fasc. 1 ... ... ... ... | 1 | 0 |
| Pag-Sam S'hi Ṭiñ, Fasc. 1--4 @ 1/- each ... ... ... ... | 4 | 0 |
| Rtogs *brjod dpag hkhri* S'iñ ( Tib. & Sans. Avadāña Kalpala Vol. I, Fasc. 1--8 ; Vol. II. Fasc. 1--7 @ 1/- each ... ... | 15 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1-5 ; Vol. II, Fasc. 1-3 ; Vol III, Fasc 1 6, @ 1/ each | 14 | 0 |
| *Arabic and Persian Series.* | | |
| 'Ālamgīrnāmah, with Index, (Text) Fasc. 1--13 @ /10/ each ... | 8 | 2 |
| Al-Muqaddasi (English) Vol I, Fasc. 1--4 @ 1/- each | 4 | 0 |
| Akbarnāmah, with Index, Fasc 1--37 @ 1/8/ each... | 55 | 8 |

*The other Fasciculi of these works are out of st[illegible] be supplied.